श्रीहर्षमिति ॥ द्वाविंशतेः पूरणः सर्गो गतः समाप्तिं प्राप । किंभूतस्य श्रीहर्षस्य—नवो यः साहसाङ्को नाम राजा तस्य चरिते विषये चम्पूं गद्यपद्यमयीं कथां करोतीति कृत् तस्य निर्मितवतः । सोऽपि ग्रन्थो येन कृत इति सूच्यते । 'नृपसाहसाङ्क-' इति पाठे-नृपश्चासौ साहसाङ्कश्च तस्य गौडेन्द्रस्य चरिते विषये चम्पूकृतः भोजराजस्य विक्रमार्कस्य वेति केचित् । द्वाविंश इति पूरणे डटि 'ति विंशतेर्डिति' इति तिलोपः ॥

**यथा यूनस्तद्वत्परमरमणीयापि रमणी**
**कुमाराणामन्तःकरणहरणं नैव कुरुते ।**
**मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः**
**किमस्या नाम स्यादरसपुरुषानादरभरैः ॥ १ ॥**

यथेति ॥ यथा परमरमणीयापि रमणी यूनस्तरुणस्य कामिनोन्तःकरणहरणं कुरुते, तद्वत्तथा कुमाराणां बालिशानां क्षीरलाभमात्रेण परमपुरुषार्थप्राप्तिमभिमन्यमानानामननुभूतकामसुखानां चित्तं स्ववशं कैव कुरुते, अपितु—न कापि । तथेयं काव्यरचनारूपा परमरमणीया मदुक्तिरपि श्रवणमननादिवशात्सुधीभूयामृतत्वं प्राप्य सुधियः सकलदर्शनरहस्यवेदिनोऽतिसरसस्य पण्डितस्य चेतश्चेद्यदि मदयति आनन्दयति, तर्ह्यस्याः सुधियाऽत्यादृताया मदुक्ते रसानां नीरसानां सर्वथैवासंस्पृष्टरसशब्दार्थानामपि चलदुपलप्रायाणामतृणादापुच्छपशूनामनादरभरैस्तत्कृतावज्ञासमूहैः किं नाम स्यात्, अपितु न किंचिदप्यस्यास्तैरपकर्तुं शक्यते । सुधीभिरादृते सति नीरसैरकृते कृते वाप्यादरे न किंचिदित्यर्थः । सुधीभिरादृतत्वात्सकलगुणपूर्णातिसरसेयं मदुक्तिरिति भावः । मदुक्तेः सुधारूपत्वाभावात्क्षोदानन्तरं च सरसत्वप्रतीतेः सुधात्वात्सुधीभूयेति च्विः । सुधिय इति जात्यभिप्रायेण । एकेनापि सुधियादरे कृते महद्गौरवम्, बहुभिरप्यज्ञैरनादरेषु कृतेष्वपि न किंचिल्लाघवमित्यभिप्रायेण वा । यून इति प्रतियोगिन एकवचनान्तत्वाचैकवचनम् । कवेः स्वग्रन्थमुद्दिश्येयमुक्तिः ॥

कविरर्थान्तरोक्त्या स्वीयामुक्तिं वर्णयति—

**दिशि दिशि गिरिग्रावाणः स्वां वमन्तु सरस्वतीं**
**तुलयतु मिथस्तामापातस्फुरद्ध्वनिडम्बराम् ।**
**स परमपरः क्षीरोदन्वान्यदीयमुदीयते**
**मथितुरमृतं खेदच्छेदि प्रमोदनमोदनम् ॥ २ ॥**

दिशीति ॥ गिरिग्रावाणोऽद्रिपाषाणा दिशि दिशि स्वां निजां सरस्वतीं नदीमन्तर्गतजलप्रस्रवणं वमन्तु मुञ्चन्तु । आपातः सामस्त्येन पतनं स्फुरन्प्रकाशमानो ध्वनिडम्बरः शब्दाडम्बरो यस्यां तां च नदीं मिथस्तुलयतु मिथोऽन्यनद्या समीकरोतु । अविसर्गान्तपाठे—आपातेन समन्तादूर्ध्वदेशादधःपतनेन प्रकाशमानः शब्दाडम्बरो यस्यां तामन्यनद्या समं समीकरोतु । जन इत्यर्थः । अथच—आपाते प्रथमारम्भ एव स्फुरत्प्रपातघोषां तां जनो मिथस्तुलयतु । उभयव्याख्यानेपि परिणामे तु न नदी न च तस्याः शब्दाडम्बरश्चिरंतन इत्यर्थः।स क्षीरोदन्वान् परं केवलं, अपरः न विद्यते पर उत्कृष्टो यस्मादत्युत्कृष्टः, अथच—अन्य एव । यतो यस्य क्षीरोदस्येदं यदीयममृतमेतादृशमुदीयते उत्पद्यते । कीदृशम्—मथितुर्देवादेः खेदच्छेदि मथनजनितक्लेशापहम् । तथा—प्रमोदनं नितरामानन्ददायि । तथा—ओदनं भक्तमास्वाद्यं सिद्धान्नरूपम् । अथच—एवंभूतं परमुत्कृष्टममृतं यदीयमुदीयते स क्षीरोदन्वानपरः परोऽन्यो नास्ति किंत्वेक एव । अथच—प्रतिदिशं सर्वदेशेषु गिरि वाण्यां विषये पाषाणतुल्या जडा अन्ये कवयः स्वीयां वाणीमुद्गिरन्तु । आपातेन प्रतिभामात्रेण स्फुरन्ध्वन्याख्यकाव्यविशेषस्याडम्बरो यस्यां, प्रथमारम्भ एव स्फुरन् शब्दाडम्बरोऽनुप्रासो यत्र तां वा, वाणीमन्योन्यं जनः समीकरोतु यस्य कवेरुक्तिरस्येव, अस्य च तस्येव इत्येवं तुलयतु । 'आपातः' इति विसर्जनीयान्तपाठे—आपातः प्रतिभासस्तां तुलयत्वित्यर्थः । एवंविधं परं काव्यामृतं यदीयमुत्पद्यते स क्षीरसमुद्रतुल्यः श्रीहर्षकविरपरो-(न्यो) नास्ति, किं त्वेक एव । अन्ये कवयः पर्वतग्रावतुल्याः, अहं श्रीहर्षस्तु क्षीरसमुद्रतुल्य इत्यर्थः । यथा क्षीरसागरो नीरार्थिनोऽपि तीरमात्रस्थान्क्षीरेण तर्पयति । लक्ष्मीकौस्तुभामृतादिभिः परमानन्ददायिभिः कृतार्थयति, (तथा) मदीयकाव्यविचारकस्यैव खेदच्छेदि प्रमोदनं वचनामृतमुत्पद्यते, नान्यकाव्यविचारकस्येति, अन्ये ग्रावतुल्याः क्षीरोदतुल्यश्चाहमिति भावः ॥

इदानीं प्रसादरूपमुख्यगुणाभावादतिदुर्बोधत्वादकाव्यमिति ये वदन्ति, तच्छङ्कामपनुदन् खलदर्पदलनार्थं गुरुसंप्रदायेन विना दुर्बोधमित्यतिगाम्भीर्यप्रतिपादनार्थं च बुद्धिपूर्वमेव मयेदं काव्यं तत्र तत्र दुर्बोधं व्यरचीत्याह—

**ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया**
**प्राज्ञंमन्यमना हठेन पठिती मास्मिन्खलः खेलतु ।**
**श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-**
**त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः ॥ ३ ॥**

ग्रन्थेति ॥ आत्मानं प्राज्ञं मन्यन्ते प्राज्ञंमन्यं मनो यस्यैवंविधोऽस्मिन्काव्ये हठेन स्वीयप्रज्ञाबलेन पठितमस्यास्तीति पठिती इदं काव्यस्य पाठकः खलो मा खेलतु 'किमत्रास्ति, अश्रुतमेव व्याकर्तुं शक्यते,' इत्यवज्ञापूर्वां दर्पाभिव्यक्तिं मा कार्षीदित्येवमर्थमिह काव्ये क्वचित्क्वचिदपि तत्र तत्र स्थले मया प्रयत्नाद्बुद्धिपूर्वं ग्रन्थग्रन्थिर्ग्रथ्यमानशब्दार्थकुटिलिका न्यासि विन्यस्ता खलमुखभङ्गार्थं बुद्धिपूर्वमेवेदं काव्यं मया दुर्बोधं व्यरचि नतु प्रसन्नकाव्यकरणाशक्त्येत्यर्थः । क्वचित्क्वचिदपीत्यनेन तत्र तत्र प्रसन्नताप्यस्तीति न काव्यत्वहानिरिति सूच्यते । सज्जनस्य तु ग्रन्थविवेचनोपायमाह—श्रद्धेति । श्रद्धया गुरौ दैवतैकबुद्ध्या आराद्धेन पूजितेन गुरुणा पूर्वमश्लथा अपि श्लथाः कृता व्याख्यया सुबोधाः कृता दृढा स्वरूपतो दुर्बोधा ग्रन्थयो यस्मै स गुरुसंप्रदायावगतार्थः, अत एव दर्परहितात्सज्जनः साधुरेतत्काव्यस्य रसोर्मिरमृतलहरी तस्यां मज्जनमवस्थानं समासादयतु प्राप्नोतु । गुरुपरम्परया विनैकस्यापि पद्यस्यार्थो बोद्धुं न शक्यते, तस्माद्गुरुपरम्पराया एवाध्येयमिदं काव्यमित्यर्थः । यश्चेदं गुरुपरम्परया अधीते स सततं सुखी भवत्विति महाकविस्तस्मा आशिषं ददाति । अस्मिन्पठिती 'क्तस्येन्विषयस्य-' इति कर्मणि सप्तमी । आराद्धेति राधेरनुदात्त-त्वादिडभावः ॥

इदानीं पण्डितानन्दजननद्वारा स्वकृतेरभ्युदयमाशास्ते—

**ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरा-**
**द्यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम् ।**
**यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः**
**श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियं ॥४॥**

ताम्बूलेति ॥ यः कान्यकुब्जेश्वरात्सकाशात्सकलपण्डिताधिक्यव्यञ्जनं ताम्बूलद्वयं विद्वद्योग्यमासनं च लभते । न केवलं राजपूज्य एव, किंतु—यः समाधिषु अष्टाङ्गयोगेषु ध्यानेषु वा विषये प्रमोदार्णवं परमानन्दस्वरूपं परं वागाद्यगोचरं ब्रह्म साक्षात्कुरुते । न परं पूर्वोक्तगुणविशिष्टो ब्रह्मविदेव, किंतु—यदीयं काव्यं मधुवर्षि अतिसरसस्वादमृतवर्षि । न परं पूर्वविशेषणविशिष्टोऽतिसरसो महाकविरेव, किंतु—तर्कशास्त्रेष्वपि यस्योक्तयः धर्षिताः पराभूताः परे प्रतिवादिनो याभिस्तादृश्यः । तस्य विद्वच्चक्रचूडामणेः श्रीहर्षकवेरियं काव्यरचनारूपा कृतिः कृतिनां सुधियां मुदे आनन्दायाभ्युदीयात्, कृतिनामानन्दं कुर्वती सत्याकल्पमतिवृद्धिं प्राप्नुयादित्याशीः । सर्वत्र यच्छब्दनिर्वाहो गुण एव । अभ्युदीयादिति 'ई गतौ' इत्यस्य रूपम् ॥

सन्तः सन्तु परप्रयोजनकृतः कल्पद्रुमन्तः सदा
स्वस्मिन्नेव पथि प्रवर्तनपराः सत्कीर्तयश्चापरे ।
अन्ये निस्पृहणाः श्रितश्रुतिपथा दीव्यन्तु भव्याशया
काकन्तः कलहप्रियाः खलजना जायन्तु[1] जीवन्तु वा ॥

वासनामस्य रामस्य किंकरस्य जगत्पतेः ।
नो चेत्पूरय, कल्पेशकल्पस्य तव किंकर ॥

इति श्रीबेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे द्वाविंशः सर्गः समाप्तः ॥

समाप्तश्चायं ग्रन्थः ॥

शुभम्

१ 'जै क्षये' इत्यस्य रूपम् ।



# नैषधीयचरितस्थश्लोकानां मातृकावर्णक्रमेणानुक्रमणी ।

**इति नैषधीयचरितस्थश्लोकवर्णानुक्रमणी संपूर्णा ।**



